# वेदपरिभाषाकारिकाशिक्षा

अथ वेदपरिभाषा कारिका शिक्षा प्रारभ्यते

श्रीरामं सद्गुरुं याज्ञवल्क्यं कात्यायनं तथा
नत्त्वा पदानां वक्ष्यामि लक्षणं चतुरक्षरैः १
अनुवाकेऽनुवाके चाम्नाये माध्यन्दिनीयके
परिभाषोच्यते हल्युक् केवलो वा स्वरोऽक्षरम् २
पदसङ्ख्याऽऽदिमेन स्याद्द्वितीयेन विसर्गनौ
सावग्रहं सेतिकारं तृतीयेन तुरीयतः ३
मान्तं क्वादिहलन्तं च सितुसेन्तं विसर्गतः
एकरूपं तु विषमं तदभावे समन्न वा ४
ककारादिहकारान्तास्त्रयस्त्रिंशद्धलः स्मृताः
सङ्ख्यापूर्तिस्तु नैकेन सँय्योगं तत्र कारयेत् ५
ऋ लृ वर्ज्या अकाराद्या औकारान्ताः स्वरा दश
आद्ये द्वितीयादिषु तु नवैवाकारवर्जिताः ६
नवाधिके तूपरिस्थरेफेण दश वा नखाः
एकोनविंशत्यधिकेऽनुस्वारात्तिथयः स्मृताः ७
दशघ्ने हल्युते नाचा पदसङ्ख्याऽऽदिमेऽक्षरे
द्वितीयादित्रिष्ठहल्भिर्विसर्गोऽवग्रहश्च मः ८
विसर्गः पदमध्यस्थः पद्यान्तश्च पदान्तगः ९
पद्यान्तं च पदान्तं च व्यञ्जनं सितुसेन्तकम्
कटौ तपौ ङणनमा हलः पद्यपदान्तगाः १०
इयञ्चतुर्वर्णयुता निर्णीय परिभाषिका
सौकर्यदात्री पाठस्य पदवेदस्य कारिका ११

इति श्रीमत्पण्डितसिद्धेश्वरसूनुना पण्डितरामचन्द्र-
विरचिता वेदपरिभाषा कारिका शिक्षा समाप्ता

